दूरध्वनिसंकेतः – "संस्कृतम्"

वाणीं भजत गैर्वाणीम्

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.


संपुटः ११ | 15 FEBRUARY 1973 | क्रमांकः २





परीधावि- माघांकः

शकाब्दाः १८९४

मूल्यम् ०–४० पैसाः

# विषयसूचिका










# अजस्य गांभीर्यम्

कश्चनाजः कस्यांचन रात्रौ
यूथभ्रष्टः कष्टः प्राविशत् जीर्णालयम् ।
अगर्जदर्धरात्रेऽजगन्धाकृष्टोऽभिधावन् हर्यक्षः
अजश्च शिथिलकवाटमावृणोत् आलयद्वारम् ।।

सिंहोऽस्मि द्वारि वर्ते न मुञ्चे त्वां अभक्षयित्वा
समर्यादमपावृणु कवाटं प्रविश मद्वदनम् ।
येनैककबलवत् गिलिष्यामि त्वां अबाधमानः,
नो चे त्वां चित्रं हन्यां प्राणानमोचन् शनैश्शनैः ।।

अजोऽस्म्यहं पितामहस्य पितामहः पश्य मम कूर्चां
शतं गजान् सहस्रं व्यघ्रान् एकं मृगराजं ।
हन्यामिति व्रतं मे परिपूर्येत भवतो वधादद्य नूनं
अहो सुदिनमिदं कूर्चाविसर्जनाय सिंहपिशितपारणाय च ।।

दृष्ट्वा कूर्चां श्रुत्वा च अजस्य वचनानि ।
मृगराजोऽधावद्यथागतं गुहाम् ।।



# सम्पादकीयम्

**श्रेयान् स्वधर्मो विगुणः**
**परधर्मात् स्वनुष्ठितात्**

स्वे स्वे कर्मण्यभिरतः सिद्धिं विन्दति मानवः । स्वीयं कर्मधर्मश्च यद्यपि अन्यै. अपहस्येत, अथवा निन्द्येत, तथापि ते न परिज्यजेत् । स्वीयस्य आचारस्य अनूचानस्य किमपि कारणं भवेदेव । कालव्यवधानात् कार्यकारणभावसंबन्धसुघटितत्वापरिज्ञानेन हेतुना स्वधर्मो नैव त्याज्यः । काकदन्तपरीक्षणमिव तत्कारणगवेषणमनावश्यकमेव । ये केचन अत्र मूढविश्वासत्वमारोपयन्ति ते अपि क्वचिद्विषये तद्वन्त एव भवेयुरिति तन्मुखोल्लासाय आत्मस्वरूपनाशो न कर्तव्यः । "येनाऽस्य पितरो याताः येन याताः पितामहा, तेन यायात्सतां मार्गं तेन गच्छन् न रिष्यते" ।

**शिरसि शिखा**

भारतदेशीयानां शिरसिशिखाया धारणं बहोः कालादनुवर्तते, तत्रापि स्त्रीणां पूर्णशिखा । तच्छेदनं च अमंगलप्रायं संभाव्यते । एतस्य कारणमुष्णदेशवासित्वं ऊर्ध्वगतपस्तेजस्सूचकत्वादिकं यद्यप्युच्यते तदन्यथापि प्रतिवादसंभवात् शास्त्रमात्रशरणानां तादृशाप्रतिष्ठिततर्कशरणत्वं नैव श्रेयः ।

**मुखे तिलकम्**

मुखे तिलकं भारतीयानां अत्यंन्तावश्यकं मन्यते। तिलकेषु भेदो न गण्यते यथोपासनं तत्तद्धारणस्यावश्यकत्वात्। शून्यमुखता केवलं निन्द्यते। एतस्यापि आचरणस्य युक्तिभिस्समर्थनं कर्तुं शक्यते परदृष्टिपाताकर्षणनिरोधादिप्रयोजनैः। तथापि अपूर्वसंजनकताया एव तत्प्रयोजनत्वेन अंगीकारे न कापि हानिः। कर्णवेधः अपि भारतीयस्य भद्र आचारः। एवं मूर्तिपूजनं, पितृश्राद्धं, गोमयशोधनं, वेदशास्त्रपुराणादिविश्वासः, पापभीतिः, पुण्यार्जनकुतूहलं, पुनर्जन्मविश्वासः, अहिंसासत्यास्तेयादिव्रतपरिपालनं इत्यादयः भारतीयानां शुभाचाराः प्रथन्ते।

आपतिताऽस्मिन् काले हैंदवानां परानुकरणरसिकता। परेषां तृप्त्यर्थं एते शिखां खण्डयन्ति, मण्डयन्ति शिरः विविधप्रकारैः। तिलकं मार्जयन्ति, आर्जयन्ति मुखवाससा वैशद्यम्। यद्रक्षणार्थं शुल्कमपि तद्विघातुकेभ्यस्समर्प्य प्राणाधिकतया अस्माकं पूर्वजा अरक्षन्, यद्रक्षार्थं प्राणानपि अत्यजन् तयोः शिखातिलकयोर्विषये अधुनातनानां आदर एतादृशो विवर्तते।

सकलमतसहनं सकलप्रजासहमतिश्च भवेदेवास्मकं, परन्तु सामरस्यस्य अयं नार्थः यद् स्वीयस्वरूपनाशेन परानुकरणमेवेति। परस्नेहार्थं चुबुके शिखाधारणं, शिरसि शिखावारणं, मुखे तिलकमार्जनं नैव समंजसम्।

भारतीयसिद्धांतानां आचाराणां च पाश्चात्यविद्वत्प्रशंसाप्राप्तिकालेऽस्मिन् तन्निराकरणं परानुकरणं च भारतीयस्य लज्जावहं भवति।

अतो भारतबन्धून् प्रार्थये स्वस्ववेषभूषाभाषाचाराणां अपरित्यागपूर्वकं प्रपंचप्रजाभिः संगम्य प्रपंचप्रशंसापात्रं भवेयुरिति। अत्र विषये सिख्खसोदराः अत्यंतप्रशंसार्हा ये स्वस्वरूपसंरक्षणपूर्वकमेत्र विविधकर्मनिष्ठाः संस्तूयन्ते जगति।

**एतद्देशप्रसूतस्य**
**सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन्**
**पृथिव्यां सर्वमानवाः॥**

न्यायमाला:-

# अभावविरक्तिन्याय:

" अवर: "

·वैराग्यं भुक्तभोगानां कदाचिज्जायते स्वत:। स्वभावसिद्धे वैराग्ये भोग्यवस्तूनां समीपे सत्त्वेऽपि न तत्र भोगेच्छा पुनर्भवति। सैव विरक्ति: नैसर्गिकी।

दारिद्र्यदोषेण भोग्यवस्तूनां अभावे या विरक्ति: सा न स्वतस्सिद्धा। यदा पुन: भोग्यवस्तूपलाभ: तदा वैराग्यमपगच्छति। ईदृशं वैराग्यं अभाववैराग्यमित्युच्यते। ईदृशान्येव वैराग्याणि बहूनि सन्ति। यथा प्रसूतिवैराग्यं, श्मशानवैराग्यमित्यादिकं। एतादृश-स्थलेषु या या विरक्तिर्जायते सा सर्वाऽपि अभावविरक्तेर्भगिनी भवति।

यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोष: ? इति समाधानं अभावविरक्तिन्यायं स्मारयति।

"सहजं कर्म कौन्तेय मुक्तसंग: समाचर" तदेव वैराग्यम्।

◆◆◆◆◆◆◆◆◆◆

# मुक्तकम्



पित्रेऽसौ गरलं ददाविति रुषा पाथोनिधेर्जीवनं
हर्तुं क्षिप्तकर:, गिरीन्द्रसुतया "मामा भवे: साहसी।
गूढोऽस्मिन् तव मातुलो गिरिभिदो भीतस्त्वया दर्शित:
स्याद्वत्से"ति निवारित: करिमुख: पायात्सदा नो मुदा॥

–मा. शिवरामराज:.

# श्रीवेंकटेशशतकम्

**पैत्तांबाड्डि महाकवि ब. रामानुजाचार्यविरचितम्.**

**(पूर्वानुबन्धः)**

श्रीतोण्डमानभिधभूमिपतेः पुराऽऽसी-
दाकाशराज इति नामधरोऽनुजश्च ।
भक्तस्त्वयीह धरणीपतिरप्यपुत्रो
लब्धुं सुतां श्रियमसौ हि तपश्चकार ॥

तदा पुरेऽस्मिन् वरपुष्करिण्यां राजीवपुष्पादिमनोहरायाम् ।
सौवर्णमेकं कमलं बभूव यस्मिञ्शिशुः श्रीश्च हिरण्यवर्णा ॥
पत्न्या धरण्या सह तत्तटेऽस्मिन् आकाशराजस्तपसि स्थितोऽत्र ।
सूर्योदये तन्नमनप्रवृत्तश्शुश्राव बालध्वनिमंबुमध्ये ॥

गत्वा तत्र सुवर्णरूपनळिने बालां ज्वलन्तीं श्रिया
दृष्ट्वा नैजतपःफलं त्वियमिति प्रीतो गृहीत्वाऽऽदरात् ।
पत्न्या साकमुपेत्य नैजनगरं पद्मावतीति स्वयं
कृत्वाऽऽख्यामवति स्म राज्यमनघः श्रीवेङ्कटेशेक्षणात् ॥

काले गते कतिपये च विवाहयोग्यां
मत्वा सुतां वरविचिन्तनतत्परेऽस्मिन् ।
श्रीमान् स एव वररूपमुपेत्य भूपे
कन्यां तदा स्वयमयाचत वेङ्कटेशः ॥

दृष्ट्वा वरं तमथ दारसुतासमेतो
मत्वा सुलक्षणमुखैर्भगवन्तमेव ।
आनन्दतुन्दिलमना मुदितां सुतां तां
तस्मै ददावुदकदानयुतं स भूपः ॥

पद्मावतीवेङ्कटेशविवाहे दुन्दुभिध्वनिः ।
साप्सरोनृत्तशब्दं च पुष्पवृष्टिश्च खादभूत् ॥

पद्मावतीपाणिमसौ गृहीत्वा स्थानं निजं वेङ्कटशैलशृंगम् ।
श्रीवेङ्कटेशो रमयन्प्रियां स्वां गत्वाऽऽलयं पूर्णमनोरथोऽभूत् ॥

**इति पद्मावती विवाहदशकम् ॥ १० ॥**

## अथ फलश्रुत्यष्ठकम्

कतिपयकाले गच्छति निरीक्ष्य पद्मावतीं प्रियामवदत् ।
मद्हृदयस्था लक्ष्मीरेव त्वं चासि लक्षणं खलु मे ॥
यद्वदुपायोपेयत्वयुतायाः पुरुषकारताऽभ्याधिका ।
त्वय्यस्ति संश्रितेषु त्वमतो माताऽसि सर्वलोकानाम् ॥
श्रीशुकनगरं गत्वा तव जन्मस्थानमाश्रितान् रक्ष ।
साकं मया त्वमधुना प्रभृति त्वद्राज्यपालनं कुरु च ॥
प्रतिकार्तिकमासं ते महामहे त्वन्मुदे मदीयानि ।
मत्प्रहितानि स्वीकुरु माल्यादीनीति वेङ्कटेशोक्त्या ॥
स्वीकुर्वन्ती तथाऽद्यापि प्रतिवत्सरमब्धिजा ।
भाति सा वेङ्कटेशश्च पातान्नो दिव्यदंपती ॥
श्रीवेङ्कटेशशतकं स्तोत्रमेतत्स्वयं मया ।
स्वकीयं श्रीप्रदं भव्यं स्वप्रीत्यै समकारयत् ॥
प्रीयतां यत्प्रणीतेन स्तोत्रेणानेन वेङ्कटः ।
भगवान् वासुदेवो नः कलौ कालेऽपि रक्षकः ॥

श्रीवेङ्कटेशशतकं पठतां जनानां
सर्वेष्टदानमहितस्स वृषाद्रिनाथः ।
काले कलावपि दिशेदभिवांछितानि
पद्मावती च बहुमंगळदानदक्षा ॥

इत्थं श्रीवात्स्यसद्वंशजविमलगुणः श्रीवरहाख्याविद्व-
त्सूनुः रामानुजाख्यो दशविधविलसद्रूपकाणां प्रणीता ।
अन्येषां सत्कृतीनामभिनवमहिषश्रीसहस्रस्य चापि
प्राणैषीत् वेङ्कटेशस्तवमिह शतकं सर्वसिद्धिप्रदं च ॥

सम्पूर्णम्

# स्वतन्त्र - अभिनवभारतदेशः

लेखकः श्री के. टि. नरसिंहः,
व्याकरण - साहित्य - शिरोमणिः शिक्षाशास्त्री.

[पूर्वानुबन्धः]

आन्– (सपरिहासं विहस्य) सन्तानाधिक्यस्य स्वप्राणत्यागस्य च को वा संबन्धः ?

गृहस्थः– पूज्य ! अहन्तु एतेषां पञ्चदश संख्यानां सन्तानानां रक्षणार्थं मदीयं सर्वस्वमपि व्ययीकरोमि । एवं स्थिते मद्भार्या भूयोऽपि अन्तर्वत्नी जाता । सामान्यतः तस्याः शिशुद्वयमेव स्यात् । अतः एतेषां रक्षणभीत्याऽहं मत्प्राणानपि त्यक्तुं सज्जोऽभवम् ।

आन्– (सविषादं तस्य मलिनदेहं पश्यति) भो गृहस्थ ? मास्तु ते भीतिः । इतःपरं यथा ते वंशाभिवृद्धिः न स्यात् तथैव त्वत्कृते कुटुम्बनियन्त्रण (Family Planning) चिकित्सां करिष्येऽहम् ।

गृहस्थः– (सहर्षम्) तर्हि तदनन्तरं संख्याभिवृद्धि न भवेद्वा ?

आन्– नैव । प्रपञ्चे प्रतिदिनं बहुलक्षपरिमिता शिशव प्रादुर्भवन्ति । विशिष्य अस्माक आशियाखण्डे प्रतिनिमेषं पंचविंशतिसहस्र (२५,०००) परिमिताः शिशव उपजायन्ते । तेषां रक्षणार्थं प्रतिनिमेषं त्रयः भिषजः, पञ्ज दास्यः, तिस्रः उपमातारः, पञ्चाशदुत्तरसप्तशत (७५०) संख्याकाः शिक्षिताध्यापकाश्च अपेक्ष्यन्ते । अत. ईदृशविपरीत - जना-

धिक्य निवारणार्थमेव अस्माकं भारतप्रभुत्वं बहुकोटिपरिमितं धनं व्ययीकृत्य कुटुम्बनियन्त्रणकेन्द्राणि स्थापयति ।

गृहस्थः– (सामाजिकान् पुरस्कृत्य) अत्र ये केचन भवेयुः मादृशाः ते सद्य एव कुटुम्बनियन्त्रणकेन्द्रं प्रति व्रजन्तु इति मत्प्रार्थना। (भिषजे नमस्कृत्य गच्छतः। भिषगपि स्वहस्तघटिकायन्त्रं दृष्ट्वा घण्टां परामृशन् अतति)

(यवनिका पतति)

**पञ्चम प्रदर्शनम्**

**(भास्करेण स्वपितुः कृते उत्तरं लिखितम्। भास्करपिता तत्पठन् वेदिकां प्रत्यायाति। तदा तत्रस्थौ इतरग्रामीणौ तन्मुखमेव पश्यतः। भास्करपिता अतीव सन्तुष्टः तौ प्रति वक्ति)**

भास्करपिता– मम पुत्रः देशान्तरात् आयाति।

प्रथमः– कदा?

भा. पि.– अद्यैवेति उत्तरमुखेन ब्रवीमि।

द्वतीयः– किमर्थं भास्करः देशान्तरमगमत्?

भा. पि.– पूर्वमेवानेन कृषिविज्ञानमधिकृत्य अभ्यस्तं खलु। इतोऽपि सामूहिककृषिः कथं कर्तुं शक्येत इत्यवगमनार्थम्।

प्रथमः– कारणान्तरमपि भवेद्वा?

भा. पि.– ओं? स्यान्नाम।

**(तदा भास्करः स्वपेटिकां गृह्णन् रङ्गं प्रविश्य पित्रे अन्याभ्यां च प्रणमति। तदा भास्करपिता तं पृच्छति।)**

भा. पि.– प्रयाणे अपि सौविध्यमभूत्?

भास्करः– तथैव। आम्।

भा. पिता– त्वद्गमनागमनप्रयोजनं किमिति शुश्रूषवस्स्मः वयम्।

भास्करः– निवेद्यते मया ।
प्रथमः– कं देशं प्रति जगाम भवान् ?
भास्करः– जप्पान् देशं प्रति ।
द्वितीयः– किमर्थम् ?
भास्करः– कृषिरङ्गे उभयोः देशयोर्मध्ये विद्यमानभेदस्यावगम-
नार्थम् ।
प्रथमः– अपि भेदः अस्ति ?
भास्करः– पर्वतपरमाणुभेदोऽस्ति ।
भा. पिता– कस्मिन् विषये ?
भास्करः– विषये विषये ।
प्रथमः– न ज्ञायतेऽस्माभिः ।
भास्करः– विपुलरूपेण वक्तव्यम् ।
द्वितीयः– तर्हि नः कृते अवश्यं कथ्यताम् ।
भास्कर – तथैव । श्रूयतां कृषिरङ्गे किमपि उद्यमं कृत्वा तद्देशीयाः सस्यश्यामलत्वं संपाद्य तद्वारा आहारसमृद्धिं प्रापुः । किञ्च देशान्तरस्य कृतेऽपि धान्यादिकं प्रेषयन्ति ।
प्रथम – तेषां कृषिभूमिः अस्मदपेक्षया अधिका स्यात् ?
भास्कर – न हि । अस्माकं देशापेक्षया अतीव अल्पदेशोऽयम् ।
भा. पिता– सस्योत्पादने तेषां सहजसौविध्यं स्यान्नाम ?
भास्करः– तदपि न । यत जप्पान्देशे बहूनि अग्निपर्वतानि सन्ति । तद्वारा असकृत् अग्निस्रावः उपजायते । तदा सर्व-स्यापि नाशो भवति ।
द्वितीयः– तर्हि कृषिभूमिः समतला स्यात् ?
भास्कर – त्वदुक्तिरयुक्ता भवति । देशोऽयं भिन्नभिन्नलङ्कापूरितो भवति । अपि च भूमिरपि न समतला ।
प्रथमः– दीर्घकालानुभवेन साधितवन्तो भवेयुः ?

भास्करः– तदपि न । यतः द्वितीयप्रपञ्चयुद्धे हिरोषिमा प्रभृति मुख्यनगराणि संपूर्णतया नाशितानि ।

द्वितीयः– प्रभूतभूस्वामिनां हस्तेष्वेव समस्ता भूमिः निक्षिप्ता स्याद्वा ?

भास्करः– निरर्थिका शङ्केयम् । तत्र तु असंख्याकाः अल्पभूस्वामिनः अधुनापि व्यवसायं प्रकुर्वन्ति ।

भा. पिता– एवं सति तत्कथं साधितं ? ब्रूहि ।

भास्करः– ते सर्वे अहर्निशं कर्म कुर्वन्ति । जप्पानीया इत्यस्य अपरार्थः श्रमशीलाः इति । किञ्च कृषिविज्ञानप्रभावेन, नूतनबीजसंरोपणेन, क्षुद्र सस्यप्रतिरोधन जन्तुनाशेन, नवीनयन्त्रोपयोगेन, भिन्नभिन्नभूभागानां एकीकरणेन, समष्टिव्यवसायेन च तेऽभिवृद्धिं साधितवन्तः ।

प्रथमः– तद्दर्शनेनाऽस्माकं फलं किम् ?

भास्करः– तद्वत् वयमपि कुर्मः । "सङ्घे शक्तिः कलौ युगे" इति सत्यं जानीमः । पुरातनपद्धतिं त्यक्त्वा नूतनमार्गं स्वीकुर्मः ।

द्वितीयः– प्रातिस्विकपुरुषेण तत्कथं साध्यम् ?

भास्करः– प्रातिस्विकः पुरुषोऽपि जनतन्त्राख्यभवनस्य स्तम्भ एव भवति खलु । तेन यदि प्रयत्यते, तर्हि प्रभुत्वमपि तस्मै उपकरिष्यतीति भृशं विश्वसिमः ।

प्रथमः– केन प्रकारेण प्रभुत्वं सहकरिष्यति ?

भास्करः– भारतप्रभुत्वं तदर्थं बहुविधं प्रयत्नं करोत्येव ।

भा. पिता– न ज्ञायतेऽस्माभिः, यान् कांश्चन प्रकारान् ब्रूहि ।

भास्करः– तथा । प्रथमतः भारतप्रभुत्वन्तु भारतदेशे प्रतिप्रान्तं कृषिविश्वविद्यालयं स्थापयति ।

–(अनुवर्तते)

# अमरजीवी राजाजी

" अवरः "

**शान्तिरस्तु–**

भारतराजनैतिकक्षेत्रे कुरुवृद्धः, प्रथमभारतीय (गवर्नर् जनरल्) राष्ट्रपालकः प्रसिद्धः राजनीतिकोविदः महामनीषी श्रीमान् चक्रवर्ति राजगोपालाचार्यः २५–१२–७२ सोमवासरे सायं ५–४४ घण्टासमये मद्रास् महानगरे जनरल् हास्पिटल् भवने कालधर्मं गत ।

भारतराजनैतिकक्षेत्रे ऊनान्यूनं पञ्चाशद्वत्सरपर्यन्तं प्रमुखपात्रधारी "राजाजी" उपाख्यः "भारतरत्न" बिरुदाङ्कितः "सि. आर्" प्रत्याहारव्याहृतः अयं महान् नव दिनानि मृत्युना सहयुध्यन् अन्ते शाश्वतीं निद्रामुपाक्रमत् ।

मरणसमये तत्समीपे कुटुम्बसभ्याः राष्ट्रपतिः वि. वि. गिरिमहोदयः, तमिलनाडु मुख्यमन्त्री श्री करुणानिधिः, अन्ये मन्त्रिणः संस्थाकांग्रेस् नेता श्री कामराजः, भूतपूर्व केन्द्र वित्तमन्त्री श्री टि. टि. कृष्णमाचार्यः, केन्द्रमन्त्री श्री सि. सुब्रह्मण्यश्च आसन् ।

मूत्रपिण्डसम्बन्धिना व्याधिना बाधितो राजाजीमहोदसः जनवरी १७ दिनाङ्के जनरल्हास्पिटलं नीतः । सर्वविधानि वैद्यसौकर्याणि समर्पितानि । जराभारेण पुनरुज्जीवन मसम्भवमासीत् । चिकित्सया युरेमियाव्याधिस्तु शान्तप्रायः । मलविसर्जकान्त्राणि निष्क्रियाण्यासन्निति, प्रत्युत अन्तिमदशायां श्वास-कोश-व्याधिः पुनरुद्भूत आसीदिति, तत एव मृत्युरुपस्थित इति भिषग्बराः प्राहुः ।

अमरजीविनो राजाजीमहोदयस्य आत्मा शान्तो भवतु ।

तत्परिवारस्यापि सन्तापशान्ति-रस्तु ।

**प्रसिद्धिः–**

राजाजी बहुमुखप्रज्ञाशाली, प्रपञ्चे न कोऽपि प्रमुखो विषयोऽस्ति, यस्तेन न परामृष्टो विमृष्टो वा नाऽभूत् । अयं महान् साहित्यकोविदः; रामायण महाभारत काव्येतिहासानुवादं सरलशैल्या आग्ल्यां द्राविड्यां च अकरोत् । सामान्यप्रजावगमनार्थं भगवद्गीतायाः उपनिषदाञ्च भाष्याण्यरचयत् । निजविश्वासपात्रं सिद्धान्तं प्रतिपादयितुं रक्षितुं च स न कदापि पश्चाद्गतः । विश्वासयोग्येषु विषयेषु स न कदापि सन्धिमङ्गीचकार; सिद्धान्तेषु स न कस्यापि पुरतः नतमस्तकोऽभवत् । अण्वस्त्रोत्पत्तिं विमृशन् व्यतिरेक - भावव्यापनेन निर्माणात्मकं विधानं प्रतिपादयामास । स्व. सोवियेट् प्रधानामात्येन निकेता कृश्चेव्महोदयेन साकं बहुकालपर्यन्तं पत्रव्यवहारं कुर्वन्नासीत् । अण्वस्त्रपरीक्षा-निरोधार्थं स्व. केन्नेडीमहोदयं अङ्गीकारयितुं अमेरिका देशमप्ययं गतः ।

**दिशापरिवर्तनम्–**

अस्य सिद्धान्तेषु राजनैतिकचर्यायां च परस्परविरुद्धा अप्यंशास्सन्ति । ३५ वत्सरेभ्यः प्राक् मद्रासराष्ट्र - मुख्यमंत्री भूत्वा अनिवार्यपाठ्यतया हिन्दी-भाषाध्ययनं यः प्रवर्तयामास स एव अन्त्यकाले हिन्दी भारत-राष्ट्र - राजभाषा भवितुं नार्हतीति प्रतिवादमकरोत् । हिन्दी व्यतिरेकोद्यममपि दक्षिणभारते प्रोत्साहयामास च । द्र. मु. क. पक्षं मद्रासराज्याधिकारे रूढमूलं कर्तुं यावच्छक्ति साह्यमारचयत् । कांग्रेसपक्षं परित्यज्य स्वतन्त्रपक्षं स्थापयामास । आरोग्यविधिषु राजाजी महान् श्रद्धालुः । आहाराविहारादौ अनिवार्यविधया नियमपालनेन ते ९४ वर्षेऽपि वार्धके नीरोगस्सन् ग्रन्थपठने, लेखने च समर्थ आसीत् । स्वदेशीय - विदेशीय-वार्तापत्रिकापठनं स्वयं कुर्वन् शृण्वन् वाऽसीत् ।

–(अनुवर्तते)

# सल्लापः सुहृद्भिः

लेखकः श्री य. कृष्णशर्मा, बेंगलूरु–४.

## १. श्रोता भवति वा न वा !

दुर्लभेषु अन्यतमं हि वक्तृत्वं नाम। तत्रापि संस्कृतस्य वक्तारः दुर्लभतमाः। केनचित् उक्तं क्वचित् यत् "लेखनं हि अध्ययनं विहंति, वक्तृत्वं तु अध्ययनं लेखनं चेति द्वयमपि" इति। अत एव ? संस्कृते अधीतिन वयं प्रायः न प्रवर्तामहे संस्कृते किमपि लिखितुं वक्तुं वा।

यद्यपि जाग्रत्येव वहवः संस्कृतस्य लेखकाः वक्तारश्च राष्ट्रस्य भाग्यात्। परं तु श्रोतारो नैव लभ्यंते। इदं तु सामान्यमेव, न तु विशेषः; यत् संस्कृतपाठशालासु महापाठशालासु वा आयोज्यमाने सांस्कृते समारंभे तत्समारभायोजकाः केवलं द्वित्राः उपतिष्टंति, नेतरे छात्राः अध्यापकाः वा इति। प्रायेण हि संस्कृतज्ञाः अन्तर्मुखाः भवंति। जनसंमर्दात्, कोलाहला द्वा मानसिकी शांतिः एकाग्रता च विक्षुभ्यति। अत एव हि वयं सभासमारोहादिभ्यः पलायामहे सुदूरम्। इत्थं च सुभाषितमिदं समन्वेति संस्कृतसमाजेऽद्य यत् "संस्कृतस्य वक्तारो दुर्लभाः लोके श्रोतारस्तु सुदुर्लभा." इति।

## २. संस्कृतश्राद्धम् !

"न नाम विस्मर्तव्यं 'संस्कृतं' इति पदं" इति कृत्वा संस्कृतोत्सवनाम्ना सर्वत्र समाचर्यते संस्कृतश्राद्धं भारतेऽद्य महता संरंभेण। संस्कृतस्य प्रतिसांवत्सरिके श्रद्धेऽत्र पितृस्थानाय नगरपालिकायाः अध्यक्षः, विश्वेदेवस्थानाय मान्यः राज्यपालः, विष्णुस्थानाय मान्यवरः शिक्ष-

णसचिवः; पौरोहित्यनिर्वहणाय तुंदिलः कश्चित् धनी च आहूयन्ते सादरम्। एते किल महान्तः सम्यगिव जानंति संस्कृतं आंग्ल्याः माध्यमेन। सर्वे च ते स्वकीयेन आंग्लभाषणेन, देशभाषाभाषणेन वा संस्कृतज्ञान् अशेषानपि चकितान्, स्तब्धान्, मूकान्, अंततः अज्ञांश्च विदधति। "मॉक्स्मुल्लरः" संस्कृतविषये एवमवदत्, मॉक्डोनालः अनैवमवादीत्" इत्येवं वदन्तः ते संस्कृतोपरि अन्यादृशमेव प्रकाशं विकिरंति। "स्याँस्क्रिट्" "स्याँस्क्रिट्" इति भाषणस्य आन्तं यावत् असकृत् उच्चैःस्वरेण उच्चारयंति।

वस्तुतः वहूपकृतं पाश्चात्यैः विदद्भिः संस्कृतम् प्रति। सर्वथा वयं अधमर्णाः एव स्थास्यामः तेषां सर्वदैव इति नातिशयोक्तिः। परं, यत्र सांस्कृते समारंभे, पाणिनेः, वाल्मीकेः, व्यासस्य वा, भासस्य, काळिदासस्य, बाणस्य वा, शंकराद्याचार्याणां, जिनबुद्धदीनां वा, दर्शनस्य कस्यचित्, रामायणस्य, महाभारतस्य वा कस्यचित् संस्कृतग्रन्थस्य नामापि नोच्चार्यते, यत्र च सांस्कृते समारंभे, स्वागतादि वन्दनार्पणं यावत् सर्वे कार्यकलापाः आंग्ल्या देशभाषया वा निर्वर्त्यंते, कथं बा अर्हति अयं सांस्कृतसमारंभव्यपदेशमिति न पश्यामि।

"दिनाचरणं" इति शब्दः "और्ध्वदैहिकं कर्म" इत्यर्थं अभिधत्ते कर्णाटकेषु। युज्यते किल संस्कृतस्यापि दिनाचरणं तदभिमानिनां अस्माकम्, यतो हि, अविमृश्यकारितापटवः पाश्चात्यविमर्शकाणां वचनमेव प्रमाणं मन्वानाः भारतीयाः अपि केचित् "संस्कृतं मृतभाषा" इति तारं गर्जंति तदा तदा। इत्थं च युक्तमेव मृतस्य संस्कृतस्य पुण्यलोकावाप्तये संस्कृतोत्सवनाम्ना (संस्कृतदिनाचरणनाम्ना) और्ध्वदैहिककर्मानुष्ठानं, प्रतिसांवत्सरिकश्राद्धानुष्ठानं च। विश्वसिमि, अनेन च कर्मणा संस्कृतं अचिरादेव शाश्वतं पुण्यलोकं आप्नुयात् इति। क्षाम्यतु संस्कृतं, क्षाम्यन्तु च संस्कृतज्ञाः माम्!

–(अनुवर्तते)

# मयसभा

रचयिता– श्री पंडितः दीवि. वेङ्कटरामाचार्यः, गर्तपुरी.

अहो! एतन्मयसभाभवनसौन्दर्यं निरुपमानं, त्रिजगज्जेगीयमानं च। दशकिष्कुसहस्रविस्तारायामरमणीयम्, प्रभाकरप्रभानिभशुभतेजोविराजितम्, सकलरत्नाकरैकप्रशस्तरत्नकाञ्चनचयाञ्चितम्, अनल्पशिल्पकल्पनाकल्पितं चास्य सौन्दर्यं हरिहरादीनपि आश्चर्यचकितान् करोतीति नातिशयोक्तिः।

अपि च अगणितमणिमाणिक्यलिखितरङ्गवल्लिकालङ्कृतम् लम्बमानमणितोरणराजिविराजितम्, चित्रविचित्रचित्रसहस्रप्रशोभितम्, कर्पूरकस्तूरिकाकुंकुमप्रमुखदिव्यपरिमळद्रव्यमयम्, सर्वगीर्वाणप्रशंसनार्हाद्भुतवस्तुसन्दोहसम्भरितम्, सुरेश्वरधनेश्वरप्रमुखसकलदिक्पालकसभाभवनसौन्दर्यम् अस्याः सौन्दर्यस्य सहस्रांशमपि अनुकर्तुं नार्हति। संपूर्णचन्द्रचन्द्रिकासन्निभस्फटिककुड्यानि, कनककवाटगेहळीविटङ्कवातायनानि, पुष्यरागवितर्दिकान्, विनिर्मलस्फटिकोपलसोपानमार्गान्, समस्तनिर्जरस्तवनीयस्तम्भसहस्रम्, मणिगणकिरणप्रसारकस्तम्भोदञ्चनानि वीक्षितुं सहस्राक्षोऽपि नालमिति मन्ये।

अहह! कुतोऽयं गीतध्वनेः संभूतिः? सुयोधनहृदयमप्यानन्दडोलिकाभिर्दोलायते। परमानन्दानुसन्धानमेतद्गानमाधुर्यम्। (परितः विलोक्य) कुत्राऽपि न दृश्यते? कथं अमन्दमन्दारमरन्दपरिष्यन्दमानेन हृष्यदिन्दिन्दिराबृन्दस्य झँकारोऽयम्। बम्भरसंरम्भोऽयं अस्माकं श्रवणयोः अपूर्वमानन्दं जनयति। भृङ्गानपि संमोह-

यन्ति इमानि प्रसूनानि, अतीवमनोहराणि च। (पुष्पाणि स्पृष्ट्वा) चित्रं चित्रमेतत्। तर्हि, कुतोऽयं पुष्पलिहां झंकारः! ऊहातीतः, चित्रमेतद्वर्णनातीतम्। तत एव आबालगोपालं "मयसभा", "मयसभा" इति स्वप्नायते। किमयं पुष्पसौरभसन्दोहः? आम्, ज्ञातं, अस्याः चन्दनगन्धितनूलतिकायाः दिव्यगन्धः। अहह! एषा मन्मथस्य अस्त्रं, उताहो त्रीन् लोकान् जेतुं ब्रह्मणा सृष्टं दिव्यास्त्रं वा? विद्याधराः, फणाधराः, वीणाधराश्च, अस्याः शोणाधरायाः सदृश्यः भवन्ति वा!

अस्या वदनं संपूर्णचन्द्रकलासदनम्। कंठोऽयं दिव्यशंखसौन्दर्यमङ्गलकरः। करौ त्रिजगतां शोभाकरौ। नेत्रे शतपत्रजैत्रे। अधरः सुधामधुरः। जघनं धराघनम्। मध्योऽयं भावाभावमध्यः। केशपाशः घनसंकाशः। ऊरू रम्भाद्वयतिरस्कारौ। पदौ मृदुपल्लवास्पदौ। अस्याः सौन्दर्यं अन्यस्यां कस्यांचन सुन्दर्यां दृश्यते वा? एषा सुन्दरी सर्वसमयसौख्यप्रदात्री न भवेद्वा? अस्याः विना सख्यं जीवितमेव निस्सारं, निस्तेजश्च। मदनास्त्रमेव एषा नारी। एनां पश्यन्नेव पराङ्गनापराङ्मुखोऽपि सुयोधनः मदनविकारं प्राप्नोतीति महदाश्चर्यम्। अहं भावयामि अनया चतुरप्रसङ्गतरङ्गेषु प्लवमानः दरहासपाशैः बद्धः मधुरगानैरालापितः, प्रणयकलाप्रावीण्येन प्रदर्शितो भवेद्यद्यहं अदृष्टवान् मत्तः कोऽन्यः? अस्याः करपल्लवेषु स्थिता प्रसूनमालिका नानावासनावासिता, विशेषविलासनिलया च सौन्दर्यं प्रदर्शयति। एनां भृतवतो जन्म धन्यम्। हे कलकंठि! उत्कंठया स्थितस्य नरकंठीरवस्य मम कंठं मनोहरेण सुमनोहारेणालंकुरु। आः! मौनमवलंबसे वा? स्त्रीणां सहजभूषणं लज्जां वहसि वा? उताहो, अस्मानवगन्तुं धृतो मनोरथः?

श्रूयतां, वयं विश्वविश्वंभराधीश्वराः। अखर्वबाहागर्वनिर्वहणाः। अवार्यशौर्यधैर्यधुर्याः। कुरुक्षितिपतयः। निखिललोक-

लावण्यसीमाधाम त्वम् । अभिमानधनः धराधवोऽहं । आवयोः सख्यं अनुपमानं भविष्यति । मम हृदयंगमा त्वम् । रमणीमणे ! रमणीयमणिकंकणकिंकिणीगणक्वाणैः मन्दाक्षमन्दाक्षरैश्च सकाशमस्माकं आयाहि । भवत्करविलसिता सुममाला मदीयगलसीमानमलंकरोतु । तदा हि राजाधिराजोऽहं त्वदीयहृदयाधिदैवतं नूनं भविष्यामि । आं, अद्यापि ह्रियं धारयसि ? तर्हि, वयमेव त्वत्सकाशमागत्य तव पाणिग्रहणं कुर्मः । (समीपं गत्वा) आश्चर्यं ! एषा काञ्चनपाञ्चालिका बालिका ! इयं राजाधिराजमेव आश्चर्यहर्षायत्तचित्तं करोति । (स्पृष्ट्वा) अयं कलाखंडः रमणीयः खलु चिरस्मरणीयश्च । संक्रन्दनसंस्तूयमानसभाभवननिर्माणप्रवीणः मयः कलामयः । तस्य महनीयशिल्पं दर्शं दर्शं विबुधैः हेमनाम्नी अप्सराङ्गना दत्तेति न किञ्चिदप्याश्चर्यम् । अहो ! एतत्सुन्दरमन्दिरसन्दर्शनं गतजन्मकृतसुकृतफलम् । अस्या सभायाः सम्पादनेन पाण्डवाः लब्धप्रतिष्ठा । तेषामैश्वर्याणि द्विगुणीकृतानि शत्रूणां ईर्ष्याकराणि च । आः; किम् धरणीधारणधुरीणस्य गदायुद्धप्रवीणस्य, सुयोधनसार्वभौमस्य वदनाद्वा एषा अपश्रुतिः पाण्डवाधमानां एतादृशी अशेषख्यातिर्वा ? एतावत्पर्यन्तं एकचक्रपुरे भैक्षम् चरन्तो पाण्डवार्भकाः जीवन्ति स्म । परमद्य अक्षीणलक्ष्मीसंसेव्याः ते कुबेरमेव अधिक्षिपन्तीति महदाश्चर्यम् । राजसूयं परिसमाप्य सुवर्णशकलान्, विशुद्धरत्नाजालानि च प्रजाभ्यः बहूकृतानीति इतोऽपि चित्रम् । भोजनतुष्टाः शतसहस्रभूसुरग्रामण्यः निर्विरामं शंखध्वानेन तदध्वरोत्सवं समापितवन्तः । बत! पञ्च पाण्डवाः पञ्चामरद्रुमैः, हरिपञ्चायुधैः, हरपञ्चाननैश्च उपमीयन्ते ।

आहूताः क्ष्मापतयः, "एते पाण्डवाः, देवतावृक्षाः, मन्दारचन्दनपारिजातसन्तानकल्पका इव मनोरथान् पूरयितुं समर्था इति,

विष्ण्वायुधानि पाञ्चजन्यसुदर्शननन्दकशार्ङ्गकौमोदक्यः इव अजय्याः इति, ईश्वरमुखानि ईशान--अघोर - सद्योजात - वामदेव-तत्पुरुषानीव परमपवित्राः इति, मत्सम्मुखे प्रशंसनं कुर्वन्तीति कर्णकठोरमेतत् । सर्वस्मादपि अगणितमणिमया एषा मयसभा ममैकतः ईर्ष्यां जनयति, अन्यतो नेत्रोत्सवमापादयति । क्रकचाघात इव हृदयमाकलयति । अस्मज्जनकः द्रुपदसन्निधाने स्थितान् पाण्डवानाहूय कुतो वा राज्यभाग तेभ्यो दत्तवान् ! विश्वकर्मा इन्द्रप्रस्थमतिलोकसुन्दरं कुतो वा निर्ममौ ! मयोऽपि वृषपर्वणे दातुमिच्छन्नपि सभामिमां धर्मजाय कुतो वा प्रादात् ! हितैषिणस्सर्वे अपि राजसूयं कुरुत इति कुतो वा बोधमकुर्वन् ! कष्टं भोः ! सर्वथा मयि प्रतिकूलो विधि । नाहं दायादानां प्राभवं स्मारं स्मारं सोढुं शक्त । सभाया वैभवं एतैरेव नयनै पश्यन् क्षणमपि न तिष्ठेयम् । ततो मे भवनादस्मात् बहिर्गमनमुचितम् । (सर्वतो परिक्रम्य) स एव ! विवृतद्वारदेश । आं, कोमलकुसुमसुवासनामिलितमलयानिलः ग्रीष्मताप इव सर्वमपि शरीर बाधते । अस्माद्द्वारदेशान्निर्गन्तुं इच्छामि (गन्तुमिच्छति । शिरः कवाटेन ताडितम्) महती पीडा । भ्रम । द्वारदेश संवृतः । अन्यै प्रमादोऽय न दृष्टः खलु । मयस्य चातुर्यं कीदृशम् ! अगोचर मार्ग । ईर्ष्यानलदग्धदेह सुयोधन जीवितान्तं अत्रैव तिष्ठेदेव ? दायादानां भाग्यलक्ष्मीं वीक्षेत एव ? अल्पसमये अनल्पकल्प इव भासते । कथं धरामि ? अन्य मार्ग अस्ति वा ? अन्वेषयामि ? (परितो विलोक्य) अहो ! एष असमानरसालः कोकिलकुलकोलाहलानां निधानम् दर्शनकुतूहलं जनयति । (पदद्वयं निधाय अधो दृष्ट्वा) भवनमध्ये कासारः ? अयं जलाशयः मदमराळमयः अरविन्दसौगंधिकबन्धुरः शैवलोत्कररञ्जितः, नीलकूर्मसमुदयसुन्दरः । सरोवरमेतत् कथं तरणीयम् ? परिधानोत्कर्षस्य करणं

समुचितम् । अद्भुतं! एतत् नीलाश्मरश्मिस्थगितमणिस्थलम् । अमी मीनमराळवारिजकूर्माः शिलाकाञ्चननिर्मिताः । अहह! प्रजापतेः सृष्टिमपि तिरस्करोति मयब्रह्मणो सृष्टिनैपुण्यम् !

अहो! असौ बालरसालतरुः नवपल्लवैः, सुधारसभरितफलैः, नयनानन्दकरो भवति । हेमन्तेऽपि अस्मिन् प्रान्ते वसन्तः सहस्रशः प्रकाशते । अयं प्रशान्तवसन्तमधुरसमयः प्रविमलप्रसूनफलमधुरसमयः । इदमाम्रफलं भुञ्जतां जन्मसफलम् तथ्यमेव तथ्यम् । (ग्रहीतुमुद्यम्य) किं, इदं शिलानिर्मितम्? अहो! मयस्य कलाप्रावीण्यं अनन्यसामान्यं, असामान्यजनसामान्यं च । नो चेत्, असौ तरुः न केवलं मानवात्, किन्तु पल्लवखादिनः पिकनिकरानपि भ्रमयति वा? शीर्षासनेन तपः कुर्वतामपि अस्माकमेषा सभा लभ्यते वा? ज्ञातीनामधिकता कथं क्षीणतामुपेयात्, असंभवः । पाण्डवप्राभववैभवदर्शनदुर्गतिः अस्माकमागतेति महत्कष्टम् ।

जनक इव अन्धो भूत्वा जीवनं अस्मादधिकमिति मन्ये । अवश्यमेव गन्तव्यं मया । अहो! अन्यः जलाशयः दृश्यते । नहि नहि भ्रमोऽयम् । चित्तविभ्रमोऽयम् । अयमपि मणिस्थलमेव । (त्वरया पदान् प्राक्षिप्य जले निपत्य) बत! एषः स्फटिकदीप्तिजालपरिवृतस्सरोवरः । अस्या सभाया प्रलोभः अस्माकं हृदयशल्यभूतः । (परिहासं श्रुत्वा) ।

आः! का एषा? अस्मान् दृष्ट्वा परिहसति? आं ज्ञातम् । हण्डे । द्रौपदि! त्वमस्मान् परिहसितुं समर्था वा? क्षात्रं परित्यज्य, श्मश्रु वापयित्वा, ब्राह्मणवेषं धृत्वा, जरासंधं निर्जितवन्तं भीमसेनमेव परिहस । स्वयं वनितां संपाद्य सोदराणामपि अर्धाङ्गिनीं कृत्वा असमर्थ इव स्थितं पार्थमेव दृष्ट्वा विकटाट्टाहसं कुरु । अनुजैः भैक्षमाचारयन्तं धर्मराजमेव, नहि नहि अधर्मराज-

मेव दृष्ट्वा सभायां परिहस। एतादृशान् पञ्च भर्तॄन् आसाद्य क्षत्रियवंशस्य कलंकमापादयंत्याः आत्मनो परिहासं विधेहि। याहि याहि। सर्वसर्वंसहाभारधुरंधरं, अरिवीरषण्डखण्डनोद्दण्डगदादण्डधरम्, कुरुवंशदुग्धपाथोध्युद्भूतसुधाकरम्, धृतराष्ट्रसुताग्रजम् प्रमादेनापि परिहसितुं समर्था वा? पञ्चभर्तृके! राजसूयाध्वराय, आहूतोऽहं, बन्धुरहं, वयोधिकोऽहं, एतादृशं मां कुलमर्यादां अगणय्य परिहससि वा? नीचे! किं दृष्ट्वा अहंकारं प्रदर्शयसि? पञ्चभर्तृकाहमिति गर्वातिशयः? उताहो संपद्गर्वः। बन्धकि! पदताडितः कालसर्पः समयं निरीक्ष्य परीक्ष्य दंष्ट्रया दशतीति न ज्ञायते वा? अवमानदवानलवेदनादोदूयमानमानसः सुयोधनः प्रतीकारमकृत्वा कदापि न निद्रातीति नहि जानासि। (दन्तान् संघट्य) दुरहंकारे! नवखण्डलमण्डलाधिनाथस्य, रिपुकुम्भिकुंभभेदनदक्षहर्यक्षस्य अस्य दुर्योधनस्य अबला कीदृशी त्वम्? अस्मत्प्रतीकारदवाग्निज्वालासु भस्मीकरोमि त्वाम्। तव अहंकारस्य कारणभूता एषा मयसभा कथमपि मया स्वायत्तीक्रियत एव। तदेव न, त्वामपि कुरुवृद्धैः, गुरुवृद्धैः च परिवेष्ठितायां कुरुसभायां पराभूय त्वदहङ्कारं निश्शेषं करोमि।

अन्यथा नाहं गान्धारीप्रियतमपुत्रः, नहि अभिमानधनः सुयोधनः, धराधिनाथोऽपि नहिनहि नहि।






" अवरः "

आन्ध्रप्रदेश शासनसभायां आहत्य २८७ संख्याकानां सभ्यानां मध्ये २१९ संख्यायाः कांग्रेसपक्षीया एव । अस्या मवस्थायां तदेकैकनायकः श्री पि.वि. नरसिंहारावः इयत्त्वरितं (कार्यनिर्वृत्ति) (Resignation) त्यागपत्रं समर्पयेदिति न कोऽपि राजकीयकोविदः ज्योतिश्शास्त्रज्ञो वा प्रागेव विज्ञातुं पारयति । एतादृशी असाधारणी आश्चर्यकरी परिस्थिति स्समुपस्थिता । एतत्कारणभूताः संघटनाः अपि ऊहातीता एव सन्ति ।

अर्धशताब्दात्प्राक् स्वीयपौराणां रक्षणार्थं हैदराबादसंस्थानाधीशेन निजांनवाबमहाशयेन प्रवर्तितं मुल्कीशासनं संविधानानुगुण मेवेति सुप्रीम्कोर्टेन निर्णय-प्रकटनात् आन्ध्रप्रदेशे राजकीयः कल्लोलः प्रवृत्तः ।

राष्ट्रप्रभुत्वोद्योग - नियोग-शासन - गतांशान् तिरस्कुर्वता १९६९ तमे वर्षे प्रकटितेन स्वीयनिर्णयेन गतवर्षत्रयकाले अस्मिन् व्यवहारे अनुवर्तमाने शासनसंबन्धिनि समरे मुल्कीनियमशासनोज्जीवन-पुनर्निर्णयः सर्वोच्चन्यायालयेन करणीय आसीत् ।

१९५६ वर्षे आन्ध्रतेलंगाणानायकानां मध्ये संभावितमहाजनांगीकारेण तेलंगाणाप्रान्तीयानां कतिपयोद्योगनियोगविधाने विशिष्टं प्राधान्यं कल्पयितु मिच्छया केन्द्रशासनं प्रवृत्तम् ।

मुख्यमन्त्री श्री पि. वि. नरसिंहारावः सन्दर्भवशात् इष्टगोष्ठ्यां (न तु शिष्टगोष्ठ्यां) वदन् "मुल्कीसमस्यायाः सर्वोच्चन्यायालयः अन्तिमनिर्णय

मकार्षीत्" इत्युद्घाटयामास। मुख्यमन्त्री तेलंगाणाप्रान्तीय इति हेतोः तदुक्तं दुरुक्त मिति मन्वानानां आन्ध्रोद्योगिवर्गाणां मध्ये असंतृप्तिः प्रज्वलिता।

एतद्विषये यथाकथंचित् परस्पराङ्गीकारं साधयितुं कृताः प्रयत्नाः विफला अभवन्। ततश्च प्रधानमन्त्रिण्याः निर्णयः प्रार्थितः।

गत नवम्बर २७ तमे दिने प्रधानमन्त्रिणी पञ्चसूत्र-पथकनाम्ना मुल्कीविवादपरिष्काराय कंचन निर्णयं प्रकटीचकार। परन्तु आन्ध्रप्रान्तस्यापि प्रान्तीयसंघः आवश्यक इति, आन्ध्रप्रान्ते अभिवृद्धिहीनस्थानानां अभिवृद्ध्यर्थं अधिकधनवितरणमपेक्षितमिति च आन्ध्रप्रान्तमन्त्रिणः अवकाश-नियम (Conditions) मुपक्षिप्य प्रधानिपथकमङ्गीचक्रुः।

१९७२ दिसम्बर ६ तमे दिने तदानीन्तनोपमुख्यमन्त्रिणः बि. वि. सुब्बारेड्डिनः नेतृत्वेन नव आन्ध्रमन्त्रिणः स्वीया मसम्मतिं प्रकाशयन्तस्सन्तः मन्त्रिपदवीपरित्यागमकुर्वन्।

मुल्कीनियमनिवर्तन - मभिलषन् आन्ध्र NGO संघः कार्यबन्ध मारेभे दिसंबर १७ तमे दिने। तदनन्तरचर्याः राष्ट्रविभजनोद्यमप्रवृत्ताः। ततः पश्चात् पृथगान्ध्रराज्यमभीप्सितं इति दिसंबर १७ दिने विजयवाडायां, दिसंबर ३१ तमे दिने तिरुपतिनगरे च आन्ध्रकांग्रेस् शासनसभ्यानां महासभास्सम्पन्नाः। पृथग्राज्यसाधनाय करप्रदानं तिरस्कृत्य प्रजाः प्रभुत्वसहकारं निराकुर्यु रिति निर्णीतम्। पूर्वोक्तोभयविधसभासु आन्ध्रप्रान्तीयानां १४१ संख्याकानां कांग्रेसशासनसभ्यानां मध्ये ऊनानूनं ८० संख्याकानां सभ्यानां उपस्थिते कारणात् पृथग्राज्योद्यमाय किञ्चिदिव बल मुपगतम्।

विजयवाडसभानन्तरं आन्ध्रप्रान्तीयाः ९ संख्याकाः मन्त्रिणः मन्त्रिपदवीपरित्याग मकुर्वन्। नवंबर २१ तः आन्ध्रप्रान्ते बहुषु सन्दर्भेषु रक्षकभटानां अग्नेया-

स्त्राणां प्रयोगेण ३५ संख्याकाः मृताः । उद्यमकाराः रैल्वेसम्पत्ति बहुशः ध्वंसयामासुः । अनेन कारणेन आन्ध्रप्रान्ते रेल-शकटानां गतागतं स्तब्धमासीत् ।

परिणामतः १९७३ जनवरि १० नमे दिने राष्ट्रस्य कांग्रेस-हठात्-संघं निवर्त्य कांग्रेसाध्यक्षः २० संख्याकैः सभ्यैः समन्वितं उन्नताधिकारसंघं न्ययुंक्त ।

जनवरी ११ तमे दिने मुख्य-मन्त्रिणः सूचनानुसारेण राज्य-पालः नूतनं अष्टमन्त्रि-वर्गं नियोजयति स्म । अस्मिन् विषये प्रथमतः त्रयाणां नियोग कर्तव्य इति अधिष्ठानवर्गसूचनामति-क्रम्य मुख्यमन्त्री व्यवजहारेति प्रथते ।

जनवरि १२ तमे दिने कांग्रे-साध्यक्षेण नियुक्तः उन्नताधि-कारसंघः हैदराबादे समाविश्य "राष्ट्रपतिपालनं प्रवेशनीय-मिति, तद्द्वारा राज्ये प्रशान्तिः स्थापिता स्या"दिति पुरुषकार-पुरस्सरं व्यजिज्ञपत् ।

तदुपरि केन्द्र-कांग्रेस्-कार्य-वर्गः, केन्द्रमन्त्रिवर्गराजकीय-व्यवहारसंघश्च संभूय समाविश्य पूर्वोक्तं उन्नताधिकारसंघविज्ञा-पनं अनुमेने । कांग्रेसाध्यक्षः १६ तमे दिने मुख्यमन्त्रिणं दिल्ली-नगरं आहूय त्याग-पत्र-समर्पणं समुचितमिति असूचयत् ।

१७ तमे दिने मुख्यमन्त्री स्वकीयप्रभुत्वस्य त्याग-पत्रं राज्यपालाय समर्पयामास । उक्तत्याग-पत्र कलिततया १८ प्रभृति राज्ये राष्ट्रपतिपालनं विहितम् ।

एवं कांग्रेसपक्षाधिक्यवत्यपि राज्ये राष्ट्रपतिपालनं विहितम् । अनेन इदं सूच्यते यत् मुल्की-समस्यायाः प्रारम्भादेव आन्ध्र-प्रदेशमन्त्रिमण्डले ऐकमत्यं विच्छिन्न मिति, तच्च क्रमशः राज्यविच्छेदायापि अकल्पय-दिति । एतावता आन्ध्रप्रदेश-राज्यपरिस्थिति कथं वा भवि-ष्यतीति प्रश्नं १९७२ संवत्सरः १९७३ संवत्सरस्य पुरस्तात् उपाक्षिपत् ।



# श्री जगद्गुरुबोधानन्दभारतीस्वामिनः जयन्तीमहोत्सवः

**रचयिता डॉ. राणी रामानन्दशास्त्री.**

नृसिंहयज्वा कालज्ञः सर्वशास्त्रनिधिर्गुरुः ।
पौण्डरीकातिरात्रादिक्रतुभिः परिपावितः ॥

राज्ञीवंशकुलांबोधौ जनिमाप सुधीरसौ ।
तुरीयं त्वाश्रमं प्राप्य जगद्गुरुपदं दधौ ॥

स्वपक्षस्थापने तद्वत्परपक्षपराहतौ ।
शास्त्रान्तरादृतार्थस्य प्रसक्तस्य विचारणे ॥

राजमण्ड्रीति विख्याते भारते दक्षिणापथे ।
अखण्डगौतमीतीरे नगरे त्वान्ध्रदेशजे ॥

कालशास्त्रप्रसङ्गेऽत्र विद्वदग्रेसरान् बहून् ।
स्वपाण्डित्यप्रकर्षेण स्ववशानकरोदसौ ॥

पुण्यक्षेत्रनदीशैलद्वीपारण्यादिमण्डितम् ।
समग्रं भारतं भूमिं चचार मतिमानसौ ॥

सर्वशास्त्रार्थसिद्धांतनिष्कर्षणचणं सदा ।
अपरं शंकरं सर्वे मेनिरे पण्डितोत्तमाः ॥

आत्मतत्वानुसंधानप्रवणैकमनाश्च यः ।
"दैवज्ञसार्वभौमेति" बिरुदं प्राप्तवानसौ ॥

शृङ्गेरीश्रीविरूपाक्षपीठाध्यक्षो महामतिः ।
जगदाचार्यवर्योऽभूच्छ्रीबोधानन्दभारती ॥

स्वस्ति श्री चान्द्रमान परीधाविवत्सर मार्गशिरशुक्ल प्रतिपदि बुधवासरे (६-१२-१९७२) श्रीमत्परमहंसपरिव्राजकाचार्यवर्य सर्वतन्त्रस्वतन्त्र-सांख्याचार्य- दैवज्ञसार्वभौम - मान्ताचार्य श्रीमदभिनवविद्याशंकर श्रीश्रीश्री बोधानन्दभारती महास्वामिनः ११२ तम जयंत्युत्सवः श्री महास्वामिनः जन्मस्थले पूर्वगोदावरीमण्डलांतर्गत "एनुगुलमहल्" ग्रामे श्री महास्वामिनः शिष्यप्रशिष्येण श्रीश्रीश्री परिपूर्णप्रकाशानन्दभारतीमहस्वामिना समायोजितः ।

तस्मिन् दिने प्रभाते श्री महास्वामिनः शिष्यबृन्देन, किंच ब्र. श्री पिशुपाटि सत्यनारायणशर्मा, श्री पिच्चय्यशास्त्री, तद्-ग्रामवास्तव्यः ब्र. श्री वडलि रामावधानी इत्यादिभिः एकादश-रुद्राभिषेकः, आराधनं, वेदपठनं, सहस्रनामार्चनं च अकारिषता । ग्रामप्रमुखा. प्रमदाः पण्डिताश्च बहवस्तत्र सममिलन् ।

तत्छुभसमये मोडेकुर्रुग्राम संस्कृतपाठशाला प्रधानाचार्यः "तर्कविद्याप्रवीणः" ब्र. श्री राणी नृसिंहशास्त्री तद्ग्रामवास्तव्यः स्वाध्यायपरः ब्र. श्री वडलि रामावधानी च प्रत्येकं ११६/- रूप्यकैः सत्कृतौ । किंच; इतरे च योग्यतामनुसृत्य सम्मानिताः । अन्ते श्री महास्वामिनः तीर्थप्रसादस्वीकारपूर्वकं ग्रामवासिभिः भक्त-बृन्दसहकारेण श्रीयुतः कर्रा वेङ्कटरामशास्त्रिणः (चिट्टिबाबु) कार्यनिर्वाहकतया भोजनतांबूलादिभिः समाराधन माचरितम् ।



# ग्रन्थपरिचयः

आन्ध्रकाव्यकथाः

मूल्यम् ५–००

प्राप्तिस्थानम्– S. Suryanarayana Sastry,
44, ZEERA, Secundarabad.

अयं ग्रन्थः कथाद्वादशकयुतः सरलसंस्कृतभाषायां निबद्धः संस्कृतरचनाकुशलेन श्रीमता सन्निधानं सूर्यनारायण शास्त्रिणा। अत्र बह्वीनां कथानां विषयः प्रसिद्धांध्र काव्येभ्यः संगृहीतः, कतिचन चरित्रप्रसिद्धा, एकद्वानां जनश्रुतिर्मूलं। अत्र भाषा प्रसन्ना गंभीरा कथागतिश्च स्तिमितरमणीया सहृदयहृदयहारिणी विराजते।

द्वादशसूरिचरितम्

मूल्यम् १२–००

प्राप्तिस्थानम्– श्री गोदाग्रन्थमाला,
मुसुनूरु पोस्ट्,
नूजिवीड् ता. कृष्णा जिल्ला.

इदं च श्री गोदाग्रन्थमाला निर्वाहकेण उपनिषदुद्यानकोकिलेन विद्याविशारदेन साहित्यरत्नेन भाषाप्रवीणेन श्रीमता के. टि. यल्. नरसिंहाचार्येण आन्ध्रभाषायां रचितम्। विशिष्टाद्वैत संप्रदाये आळ्वारभिख्यया प्रख्यातानां द्वादशसंख्यानां सूरीणां चरित्रमत्र निबद्धं वर्तते। रचयिता द्राविडसंस्कृतांध्रभाषासु एतत्संबन्धिनिबन्धान् बहून् परिपठ्य ललितरीत्या एतन्निबन्धमारचयत्। पदे पदे संदर्भानुगुणं द्राविडगाथानां अनुवादाः विषयोपष्टंभक-

संस्कृतांध्रपद्यानि च निवेशितानि भक्तिरसानुभवे सुपक्वद्राक्षाफलानीव स्वदन्ते । भक्तानां अवश्यपठनीयोयं ग्रन्थः ।

**बिडालमोक्षम्**

**मूल्यम्** १–२५

प्राप्तिस्थानम्– गोदाग्रन्थमाला,
मुसुनूरु पोस्ट्, कृष्णा जिल्ला.

इदं च काव्यमन्यापदेशेनाधिक्षिपति अशक्तदुर्जनं, स्तौति च उदात्तगुणभूषितं कंचन पूरुषम् ।

इदं च साहित्यकलानिधिना श्रीमता न. च. कृष्णमाचार्यकविवरेण्येन विरचितमान्ध्रपद्यैः । एतत्पद्यानि च बहुहृद्यानि पदे पदे रसं विकिरन्ति । रसिकैरवश्यं पठनीयमिदं खंडकाव्यम् ।



# चाचानेहरूपितृव्यः

**लेखकः– श्री लक्ष्मीकांत पंडरीनाथ जंभोरकर., तिरुपति.**

"आराम हराम है" एषा उक्तिः पण्डितजवाहरलालनेहरोः । या इयं उक्तिः सर्वैः बालैः तथा च सर्वैरपि जनैः हृदये सम्यकतया स्थाप्यते तथा च तदनुसारं व्यवह्रियते चेत् तर्हि संपूर्णस्य समाजस्य, तथा च संपुर्णस्य राष्ट्रस्यापि महान् उत्कर्षः स्यात् । अस्माकं राष्ट्रं सर्वेषु राष्ट्रेषु अग्रेसरत्वं गच्छेत् ।

अस्माकं चाचानेचरूपितृव्यः रसिकानां महामान्यः आसीत् । अत एव तैः गुलाबपुष्पं स्वहृदये धार्यते । पंडितजवाहरलालमहाभागाः सर्वदा हसन्तः एव व्यवहारं कुर्वन्त आसन् यथा अस्मद्गुरुचरणाः रामचन्द्र अरल्लिकट्टीमहाभागाः विकसितमुखा सदा वर्तन्ते । तेषां सर्वेऽपि व्यवहाराः अकृत्रिमैः स्नेहैः अनुप्राणिताः आसन् । ते अत्यन्तं स्नेहमयाः आसन् । तथा च बालकप्रिया अपि आसन् । अत एव तेषां जन्मदिनमेव बालदिनसमारोहार्थं निश्चितः अस्ति । अतः तेषां जन्मदिने यदि तेषां स्नेहांशस्यापि पालनं कुर्मः तर्हि वयं सर्वेऽपि कृतार्थतां गच्छेम । जयतु नेहरूपितृव्यः ।

# हरिं भज सुखंकरम्

लेखकः श्री ना. व. निगमान्तः, प्रोद्दुटूरु.

विप्रः कश्चन धर्मतत्परगुणी चारित्रशोभी सुधी-
र्वैकुण्ठं मनसा स्मरन्प्रतिदिनं तन्नामसङ्कीर्तनं ।
कुर्वन् लौकिकसङ्गवर्जनपरो वेदोक्तकर्माचरन्
कालं यापयति स्म कामविमुखो वैराग्यवारांनिधिः ॥

सोऽयं क्रोशयुगे स्थितं पुरवरं प्राप्तुं द्विजो जातुचि-
त्कृत्वा केशवपूजन हृदि सदा ध्यायन् तमेवाच्युतं ।
मार्गेणाथ कुवृक्षकण्टकशिलाकीर्णेन गच्छञ्छनै-
र्मध्येमार्गमपश्यदन्तकमिवायान्तं महाद्वीपिनम् ॥

क्रूरव्याघ्रसमावलोकनभयाज्जातैर्वपुःकम्पनैः
कर्तव्यं स्वमतःपरं किमिति सोऽजानन् परं दैवतं ।
आर्तानामभयङ्करं बुधवरैः संस्तूयमानं हरिं
स्मारं स्मारमजं प्रपत्य तरुवद्भूमौ ववन्दे प्रभुम् ॥

क्षुत्पीडासमवाप्तमन्युविवशो विप्रं जिघांसुः पतन्
लक्षीकृत्य स दण्डकल्पपतनात्तस्मात् च्युतो लक्ष्यतः ।
तत्पार्श्वप्रवहन्नदीजलचरग्राहानने दारुणे
शार्दूलो न्यपतत्तदा विधिवशाद्भक्तश्च संरक्षितः ॥

सर्वं दैववशंवदं खलु जगत्सर्वं तदाज्ञानुगं
तद्भक्तश्च विपत्तितः करुणया संरक्ष्यते हि ध्रुवं ।
इत्येवं कथयाऽनया हरिकृपानिर्हेतुका ज्ञायते
सेव्योऽसौ हरिरेव भक्तिसुलभो लोकैरतः सादरम् ॥

# गजाननसुप्रभातम्

लेखकः साहित्यशिरोमणि श्री सूरं श्रीनिवासः.

एकदन्त ! महाकाय ! प्रातः कालः प्रवर्तते ।
उत्तिष्ठ गणनाथ ! त्वं कर्तव्यं विघ्ननाशनम् ।
उत्तिष्ठोत्तिष्ठ विघ्नेश । उत्तिष्ठ गिरिजासुत ।
उत्तिष्ठाश्रितमन्दार । त्रैलोक्यं मंगलं कुरु ॥

श्रीपार्वतीप्रियविभावितपुण्यपुत्र
लोकस्थसर्वजनसन्नुतपुण्यगाथ ।
एकैकलोकजनशोकविनाशहेतो !
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥

लोकाधिशासकविलक्षणरूपरूप
लोकाग्रगण्यविबुधाग्रसदाग्ररूप ।
त्रैलोक्यदर्शनविसारितकीर्तिचक्षुः
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥

विद्यादिकालपरिपूज्य महान्भाव
वैवाहिकादिशुभसंभृतमुख्यपीठ ।
संपूर्णशास्त्रपरिकीर्तितभद्रनामन्
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥

ब्रह्मादिदेवगणसेवितपादपद्म
देवप्रकीर्तितगुणैरनुगम्यमान ।
विद्याविधायकसुनिर्मलभव्यमूर्ते
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥

अत्यन्तमोदकवशीकृत नृत्यकाले
लीलाविलासपरिपूरितमण्डलास्य ।

विद्यावतंस निरवद्यगुणाभिराम
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥
लम्बोदरेण विबुधेष्वतिमन्दगस्य
विघ्नेषु सर्वसमयेषु निवेशिनश्च ।
त्रैलोक्यसर्वजनविघ्नविनाशकस्य
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥
शास्त्रार्थसारमधुपानविमत्तभृङ्ग
भक्तौघचित्रसरसीजविभाकराथ ।
स्वेच्छाविहारविरलीकृतविघ्नसङ्घ
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥
ईशानसद्गुणजलाकरजातचन्द्र-
ज्योत्स्नातिशुभ्रदरहासविभासमान ।
पादाब्जलग्नवरनूपुरमञ्जुनाद
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ।
व्यासप्रयुक्तशुभभारतलेखनेन
त्रैलोक्यसेवितशुभंकरहस्तयुग्म ।
हेरम्ब ! पावनजनाननभास्कराथ
श्रीमद्गणाधिप शुभं तव सुप्रभातम् ॥
मंगळं विघ्ननाथाय मंगळं भद्रकारिणे ।
मंगळ विघ्ननाशाय शिवपुत्राय मंगळम् ॥
मंगळं शास्त्ररूपाय षडाननहिताय च ।
पार्वतीप्रियपुत्राय विघ्नराजाय मंगळम् ॥
द्वैमातुराय प्रमथगणेषु प्रथमाय च ।
लंबोदराय सर्वार्थप्रथायाप्यसु मंगळम् ॥
मंगळं वेदवेद्याय चित्ररूपाय मंगळम् ।
जम्बूफलादिने नित्यं मंगळं मोदकादिने ॥
धर्मसंस्थापकेभ्यश्च साधुभ्यो भुवनत्रये ।
मंगळं मंगळं विद्याप्रदाय च सुमंगळम् ॥

◆◆◆◆◆◆◆◆◆◆

# उत्तरायणपरीक्षाणां व्याक्षेपः

संस्कृतभाषाप्रचारिण्यास्सभाया उत्तरायणपरीक्षाः मार्च-मासे निर्वर्तनीयाः एप्रलमासाय व्याक्षिप्ताः । आन्ध्रप्रदेशमहा-कल्लोलेन प्रेष-पट्टिकाशकटयोरपि सस्तंभनात् अगतिकतया व्याक्षेप्तव्या आसन् । एप्रेलमासेपि तिथीनां निर्णये अशक्ता एव अद्य यावत् वर्तामहे यतोऽस्य सर्वकार्यबन्धस्य विमोचनं अद्यापि न दृष्टिगोचरं भवति ऊहागोचरं वा । अतः उपाध्यायान् अभ्य-र्थिनश्चाऽभ्यर्थये इमं अनिवार्यं विलम्बं क्षन्तुम् ।

**संस्कृतभाषाप्रचारिणी सभा,**
१५–२–७३

**ति. कं. तिरुवेङ्कटाचार्यः,**
प्रधानमन्त्री.



आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 1845/60.* *Postal R. H. No. 403.*

Licensed to Post without Prepayment. LICENCE NO. 57

भारतसर्वकारेण पुरस्कृता च

गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका

ग्रामाः सन्ति, न सन्ति तत्र मनुजाः पौरा न मे पत्तने;
शालाः सन्ति, न सन्ति तत्र वटवो नाध्यापकानां गणः ।
नद्यः सन्ति, न सन्ति तत्र पयसामोघा, न मेऽब्धौ जलं;
सर्वो मौनमुखो जनो मम गृहे; मौनाग्रही कोऽस्म्यहम् ॥

—(आलेख्यम्)

ले. श्री वैद्यः रामस्वरूपशास्त्री, सं. बालसंस्कृतम्, बम्बई-८९.



Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500